॥ श्रीः ॥

# नारायणोपनिषद् ।

जिसको

इलाके मन्शूरी पहाड, जिले गढ़वाल,

राज्य टिहरी, डाकखाना वाडाहाट,

मौजे तिलोज निवासी स्वामी

विश्वेश्वरानन्द तीर्थने

बनाया,

और

खेमराज श्रीकृष्णदासके



बंबई

खेतवाडी ७ वीं गली खम्बाटा लैन,

"श्रीवेङ्कटेश्वर" स्टीम् मुद्रणयन्त्रालयमें

मुद्रित कराय प्रकाशित किया।

संवत् १९६८, शके १८३३.



# अथ नारायणोपनिषद् ।

## श्रीशिव उवाच ।

धन्यासि पार्वति त्वं हि सफलं जीवितं तव ॥
सारात्सारतरं यन्मां पृच्छसि त्वं वरानने ॥ १ ॥

अर्थ–हे श्रेष्ठमुखवाली पार्वति ! तुमहीं धन्य हो तुमारा जीवन सार्थकहै क्योंकि आज तुम सारात्सार वार्ताको पूछतीहो १

शृणु देवि महत्सारं सद्यः सर्वफलप्रदम् ॥
यस्य विज्ञानमात्रेण सिद्धमंत्रो भवेन्नरः ॥ २ ॥

हे देवि ! जिसको जानतेही मनुष्य सिद्धमंत्र होजाताहै ऐसा शीघ्र फलका देनेवाला महासारभूत प्रकरण कहताहूं सो तुम सुनो ॥ २ ॥

तवोपरोधाद्देवेशि गुरुतंत्रं सुदुर्लभम् ॥
तंत्राणां सारभूतं यत्कथयामि महेश्वरि ॥ ३ ॥

हे देवेशि महेश्वरि ! तुमारे कहनेसे जो सब तंत्रोंका सार है और दुर्लभ है ऐसे गुरुतंत्रको कहता हूं ॥ ३ ॥

पठनाद्धारणाद्यस्य दिव्यज्ञानं प्रजायते ॥
एतत्तंत्रं सदा गोप्यं मंत्रसिद्धिप्रदायकम् ॥ ४ ॥

इसके कंठ पाठ वा धारण करनेसे दिव्य ज्ञान उत्पन्न होताहै मंत्रका सिद्धिदायक यह मंत्र सब प्रकारसे गोपनीय है ॥ ४ ॥

# अथ पञ्च शान्तयः ।



वाक् पूर्णं सहनाप्यायं भद्रं कर्णेभिरेव च ।
पञ्च शान्तीः पठित्वादौ पठेद्वाक्यान्यनन्तरम् ॥

ताश्च—ॐ वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि । वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाऽहोरात्रान्त्संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवतु मामवतु वक्तारमवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥ ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ २ ॥ ॐ सहनाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु माविद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ३ ॥ ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मामाब्रह्मनिराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ४ ॥ ॐ भद्रं कर्णेभिः शृणुयाम देवाः ॥ भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरै-

रङ्गैस्तुष्टुवा ँ सस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥५॥

॥ इति पञ्च शान्तयः ॥

---

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥१॥

आत्मैवाधस्तादात्मापृष्ठादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणात आत्मोत्तरत आत्मैवेद ँ सर्वमिति ॥२॥

अग्निर्देवो द्विजातीनां मुनीनां हृदि देवता ॥
प्रतिमास्वल्पबुद्धीनां सर्वत्र समदर्शिनाम् ॥ ३ ॥



# अथ नारायणाथर्वशिरउपनिषद ।

माया तत्कार्यमखिलं यद्बोधाद्यात्यपह्नवम् ॥
त्रिपान्नारायणाख्यं तत्कलये स्वात्ममात्रतः ॥

ॐ सहनाववत्विति शांतिः ३ ॥ ॐ अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति ॥ नारायणात्प्राणोऽजायत ॥ मनः सर्वेन्द्रियाणि च ॥ खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ नारायणाद्ब्रह्माजायते ॥ नारायणाद्रुद्रो जायते ॥ नारायणादिन्द्रो जायते ॥ नारायणात्प्रजापतिः प्रजायते ॥ नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि च्छन्दांसि नारायणदेव समुत्पद्यन्ते । नारायणात्प्रवर्तन्ते । नारायणे प्रलीयन्ते । एतदृग्वेदशिरोऽधीते ॥ १ ॥ अथ नित्यो नारायणः । ब्रह्मा नारायणः शिवश्च नारायणः शुक्रश्च नारायणः कालश्च नारायणः ॥ दिशश्च नारायणः विदिशश्च नारायणः उर्द्ध्वं च नारायणः अधश्च नारायणः ॥ अन्तर्बहिश्च नारायणः नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम् ॥ निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् ॥ य एवं वेद स विष्णुरेव भवति ॥ स विष्णोरेवाभवत् ॥ एतद्यजुर्वेदशिरोधीते ॥ २ ॥ ॐ इत्यग्रे व्याहरेत ॥ नम इति पश्चात् । नारायणायेत्यु-

परिष्टात् ॥ ॐ इत्येकाक्षरम् ॥ नम इति द्वे अक्षरे ॥ नारायणायेति पंचाक्षराणि ॥ एतद्वै नारायणस्याष्टाक्षरं पदम् ॥ यो ह वै नारायणस्याष्टाक्षरं पदमध्येति ॥ अनपब्रुवः सर्वमायुरेति ॥ विन्दते प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति ॥ एतत्सामवेदशिरोऽधीते ॥ ३ ॥ प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् ॥ अकार उकारो मकार इति॥ ता अनेकधा समभवत्तदेतदोमिति यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ॥ ॐ नमो नारायणायेति मंत्रोपासको वैकुण्ठभुवनं गमिष्यति तदिदं पुण्डरीकं विज्ञानघनम् ॥ तस्मात्तडिदाभमात्रम् ॥

ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः ॥
ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरुच्यत इति ॥

सर्वभूतस्थमेकं वै नारायणं कारणपुरुषमकारणं परं ब्रह्मोम् ॥ एतदथर्वशिरोऽधीते ॥ ४ ॥ प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानोऽपापो भवति दिवसकृतं पापं नाशयति । तत्सायंप्रातरधीयानोऽपापो भवति ॥ माध्यंदिनमादित्याभिमुखोऽधीयानः पंचमहापातकोपपातकात्प्रमुच्यते॥ सर्ववेदपारायणपुण्यं लभते । नारायणसायुज्यमवाप्नोति श्रीमन्नारायणसायुज्यमवाप्नोति य एवं वेद ॥ ॐ सहनाववत्विति शान्तिः ॥

॥ इति नारायणोपनिषद् समाप्ता ॥

# अथ वज्रसूचिकोपनिषद् ।

यज्ज्ञानाद्यान्ति मुनयो ब्राह्मण्यं परमाद्भुम् ॥
तत्रैपदब्रह्मतत्त्वमहमस्मीति चिन्तये ॥
ॐ आप्यायन्त्विति शान्तिः ॥
चित्सदानन्दरूपाय सर्वधीवृत्तिसाक्षिणे ॥
नमो वेदान्तवेद्याय ब्रह्मणेऽनन्तरूपिणे ॥
ॐ वज्रसूचीं प्रवक्ष्यामि शास्त्रमज्ञानभेदनम् ॥
दूषणं ज्ञानहीनानां भूषणं ज्ञानचक्षुषाम् ॥

ब्रह्मक्षत्रियवैश्यशूद्रा इति चत्वारोवर्णास्तेषां वर्णानां ब्राह्मण एव प्रधान इति वेदवचनानुरूपं स्मृतिभिरप्युक्तम् तत्र चोद्यमस्ति को वा ब्राह्मणो नाम किं जीवः किं देहः किं जातिः किं ज्ञानं किं कर्म किं धार्मिक इति॥तत्र प्रथमो जीवो ब्राह्मण इति चेत्तन्न; अतीतानागतानेकदेहानां जीवस्यैकरूपत्वाद् एकस्यापि कर्मवशादनेकदेहसम्भवात् सर्वशरीराणां जीवस्यैकरूपत्वाच्च ॥ तस्मान्न जीवो ब्राह्मण इति ॥ तर्हि देहो ब्राह्मण इति चेत्तन्न आचाण्डालादिपर्यन्तानां मनुष्याणां पांचभौतिकत्वेन देहस्यैकरूपत्वाज्जरामरणधर्माधर्मादिसाम्यदर्शनाद् ब्राह्मणः श्वेतवर्णः क्षत्रियो रक्तवर्णो वैश्यः पीतवर्णः शूद्रः कृष्णवर्ण इति नियमाभावात् पित्रादिशरीरदहने पुत्रा-

दीनां ब्रह्महत्यादिदोषसम्भवाच्च । तस्मान्न देहो ब्राह्मण इति । तर्हि जातिर्ब्राह्मण इति चेत्तन्न, तत्र जात्यंतरजन्तुष्वनेकजातिसंभवा महर्षयो बहवः सन्ति । ऋष्यशृङ्गो मृग्यः, कौशिकः कुशात्, जाम्बूको जम्बूकात्, वाल्मीको वल्मीकात्, व्यासः कैवर्तकन्यकायाः, शशपृष्ठात् गौतमः, वशिष्ठ उर्वश्याः, अगस्त्यः कलशाज्जात इति श्रुतत्वात् ॥ एतेषां जात्या विनाप्यग्रे ज्ञानप्रतिपादिता ऋषयो बहवः सन्ति ॥ तस्मान्न जातिर्ब्राह्मण इति तर्हि ज्ञानं ब्राह्मण इति चेत्तन्न, क्षत्रियादयोऽपि परमार्थदर्शिनोऽभिज्ञा बहवः सन्ति ॥ तस्मान्न ज्ञानं ब्राह्मण इति ॥ तर्हि कर्म ब्राह्मण इति चेत्तन्न, सर्वेषां प्राणिनां प्रारब्धसंचितागामिकर्मसाधर्म्यदर्शनात्कर्माभिप्रेरिताः सन्तो जनाः क्रियाः कुर्वन्तीति ॥ तस्मान्न कर्म ब्राह्मण इति तर्हि धार्मिको ब्राह्मण इति चेत्तन्न, क्षत्रियादयो हिरण्यदातारो बहवः सन्ति । तस्मान्न धार्मिको ब्राह्मण इति ॥ तर्हि को वा ब्राह्मणो नाम ॥ यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं षडूर्मिषड्भावेत्यादिसर्वदोषरहितं सत्यज्ञानानन्दानन्तस्वरूपं स्वयं निर्विकल्पमशेषकल्पाधारमशेषभूतान्तर्यामित्वेन वर्तमानमन्तर्बहिश्चाकाशवदनुस्यूतमखण्डानन्दस्वभावमप्रमेयमनुभवैकवेद्यमपरोक्षतया भासमानं करतलामलकवत्साक्षादपरोक्षीकृत्य कृतार्थतया कामरा-

गादिदोषरहितः शमदमादिसंपन्नो भावमात्सर्यतृष्णाशामोहादिरहितो दम्भाहंकारादिभिरसंस्पृष्टचेता वर्तते ॥ एवमुक्तलक्षणो यः स एव ब्राह्मण इति श्रुतिस्मृतिपुराणेतिहासानामभिप्रायः । अन्यथा हि ब्राह्मणत्वसिद्धिर्नास्त्येव॥ सच्चिदानन्दमात्मानमद्वितीयं ब्रह्म भावयेदात्मानं सच्चिदानन्दं ब्रह्म भावयेदित्युपनिषत् ॥ ॐ आप्यायन्त्विति शांतिः ॥

॥ इति वज्रसूचिकोपनिषद् समाप्ता ॥



# अथाष्टादशश्लोकी गीता ।

अर्जुन उवाच ।

निमित्तानि च पश्यामि विपरीतानि केशव ॥
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ १ ॥

श्रीभगवानुवाच ।

योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ॥
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥२॥
कर्मेंद्रियाणि संयम्य य आस्ते मनसा स्मरन् ॥
इंद्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ३ ॥
श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेंद्रियः ॥
ज्ञानं लब्ध्वा परां शांतिमचिरेणाधिगच्छति ॥ ४ ॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ॥
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ ५ ॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ॥
युक्तस्वभावबोधस्य योगो भवति दुःखहा ॥ ६ ॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥
मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥ ७ ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥
तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः ॥ ८ ॥
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥
साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः ॥ ९ ॥

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ १० ॥
मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ॥
निर्वैरः सर्वभूतेषु यः स मामेति पांडव ॥ ११ ॥
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ॥
ध्यानात्कर्मफलत्यागस्त्यागाच्छांतिरनंतरम् ॥ १२ ॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ १३ ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥
स गुणान्समतीत्यैव ब्रह्मभूयाय कल्पते ॥ १४ ॥
निर्मानमोहा जितसंगदोषा
अध्यात्मनित्या विनिवृत्तकामाः ॥
द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छंत्यमूढाः पदमव्ययं तत् ॥ १५ ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ १६ ॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥
भावसंशुद्धिरित्येवं तपो मानसमुच्यते ॥ १७ ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥१८॥
गीतासारमिदं पुण्यं यः पठेत्सुसमाहितः ॥
विष्णुलोकमवाप्नोति भयशोकविनाशनम् ॥ १९ ॥

॥ इति श्रीवेदव्यासविरचिताष्टादशश्लोकी गीता संपूर्णा ॥

# अथ सप्तश्लोकी गीता ।



ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १ ॥
स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ॥
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥ २ ॥
सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ॥
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ३ ॥
कविं पुराणमनुशासितार
मणोरणीयांसमनुस्मरेद्यः ॥
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ४ ॥
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥
छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ ५ ॥
सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥६॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ७ ॥

इति श्रीमद्भगवद्गीतासूपनित्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सप्तश्लोकी गीता समाप्ता ॥

# अथ चतुःश्लोकीभागवतम् ।

ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ॥
सरहस्यं तदंगं च गृहाण गदितं मया ॥ १ ॥
यावानहं यथाभावो यद्रूपगुणकर्मकः ॥
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ २ ॥
अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ॥
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३ ॥
ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ॥
तद्विद्यादात्मनो मायां यथा भासो यथा तमः ॥४॥
यथा महांति भूतानि भूतेषूच्चावचेष्वनु ॥
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ ५ ॥
एतन्मतं समातिष्ठ परमेण समाधिना ॥
भवान्कल्पविकल्पेषु न विमुह्यति कर्हिंचित् ॥ ६ ॥
एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ॥
अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥ ७ ॥

इति श्रीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैया-
सिक्यां द्वितीयस्कंधे भगवद्ब्रह्मसंवादे चतुःश्लोकी-
भागवतं समाप्तम् ॥

# अथ रामद्वादशनामस्तोत्रम् ।

अस्य श्रीरामद्वादशनामस्तोत्रमंत्रस्य ईश्वर ऋषिः अनुष्टुप्छंदः श्रीरामचंद्रो देवता श्रीरामचन्द्रप्रीत्यर्थे जपे विनियोगः ॥

ॐ प्रथमं श्रीधरं विद्याद् (१), द्वितीयं रघुनायकम् (२)॥
तृतीयं रामचंद्रं च (३), चतुर्थं रावणांतकम् (४) ॥१॥
पंचमं लोकपूज्यं च (५), षष्ठं श्रीजानकीपतिम् (६)॥
सप्तमं वासुदेवं च (७), श्रीरामं चाष्टमं तथा (८) ॥२॥
नवमं जलदश्यामं (९), दशमं लक्ष्मणाग्रजम् (१०)॥
एकादशं च गोविंदं (११), द्वादशं सेतुबंधनम् (१२)॥३॥
द्वादशैतानि नामानि यः पठेच्छृणुयान्नरः ।
अर्द्धरात्रे तु द्वादश्यां कुष्ठदारिद्र्यनाशनम् ॥
अरण्ये चैव संग्रामे अग्नौ भयनिवारणम् ॥
ब्रह्महत्यासुरापानं गोहत्यादिनिवारणम् ॥
सप्तवारं पठेन्नित्यं सर्वारिष्टनिवारणम् ॥
ग्रहणे च जले स्थित्वा नदीतीरे विशेषतः ॥
अश्वमेधशतं पुण्यं ब्रह्मलोकं गमिष्यति ॥

इति श्रीस्कंदपुराणोत्तरखंडे उमामहेश्वरसंवादे श्रीरामद्वादशनामस्तोत्रं संपूर्णम् ॥

# अथ मूलश्रुतिप्रारम्भः ।



शुभेतेशुभ ॐ नारायणाय नमः भूः स्वाहा ऋग्वेदं प्रीणाति ॥

अर्थ–नारायणशब्दते भूः प्रकट होयहै और भूः शब्दते ऋग्वेद प्रकट होयहै और पृथ्वी प्रकट होयहै ॥

ॐ तत्सद्ब्रह्मणे नमः ॥ हरिः ॐ शान्तिः शान्तिः शान्तिः ॥



ॐ

# अथ नारायणाथर्वशिरउपनिषद् ।

मङ्गलम् ।

फणीन्द्रभोगामलतल्पशायिने
दुरंतदुर्ज्ञेयविचित्रमायिने ॥
समस्तसत्त्वैकहृदब्जयायिने
नमोस्तुमेशाय विमोक्षदायिने ॥ १ ॥

मू०–मायातत्कार्यमखिलं यद्बोधाद्यात्यपह्नवम्॥ ॐ सहनाववत्विति शांतिः ॥ ॐ अथ पुरुषो ह वै नारायणोऽकामयत ॥ प्रजाः सृजेयेति ॥ नारायणात्प्राणो जायते ॥ मनःसर्वेन्द्रियाणि च ॥ खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ नारायणाद्ब्रह्मा जायते ॥ नारायणाद्रुद्रो जायते ॥ नारायणादिन्द्रो जायते ॥ नारायणात्प्रजापतिर्जायते ॥ नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि च्छन्दांसि नारायणादेव समुत्पद्यन्ते ॥ नारायणात्प्रवर्तन्ते ॥ नारायणे प्रलीयन्ते एतदृग्वेदशिरोऽधीते ॥ १ ॥

अर्थ–ॐ जो अकार ब्रह्मा उकार विष्णु मकार महादेव हैं अर्द्धमात्रा ब्रह्म सर्वसाक्षी है ब्रह्मा संसारकी उत्पत्ति करते-हैं और विष्णु भगवान् पालन करतेहैं और महादेव काल-

रूप होकर जगत्का नाश करतेहैं और ब्रह्म सबसे परे हैं और ब्रह्मा, विष्णु और महादेव इनको भी प्रकाश करनेवाला है॥ सर्व प्राणीमात्रका स्वामी है इससे परे कोई भी देवता नहीं है और यह अजन्मा है कभी जन्मता नहीं है अमर है कभी मरता नहीं है अनादि है सबसे परे है आजका नहीं है और भूत भविष्य और वर्तमान तीनों कालमें रह-नेवाला है भूत कहिये जो जन्म पूर्व होगये और भविष्यत् कहिये जो यह शरीर नाश होनेपर आगे जन्म होगा और वर्तमान कहिये जो इस समय होरहाहै। शरीरका नाश होनेपर आत्माका नाश नहीं होताहै। पहिले शरीरमें भी प्रकाश करता रहाहै और वर्तमानमें भी प्रकाश रहाहै और आगे भी प्रकाश करेगा केवल प्रकाशसे तात्पर्य है और कुछ नहीं है। 'अथपुरुषः' कहिये कि जो सर्वपुरुषोंसे उत्तम है और जो सबके शरीरमें पूरे होय पुरीपुरीमें वास करता है और सर्वव्यापक नारायणरूप करके प्रकाश कररहा है और (हवै) नारायण जो हैं सो निष्काम प्रजाको अपनी मायासे उत्पन्न करतेहैं और नारायण प्राणोंके प्राण हैं और प्राणोंके प्रेरक हैं और नारायणकी सत्ता करके प्राण भी सामर्थ्य रखता है और जो मन है सो भी नाराय-णकी सत्ता पाकर गमनागमन करताहै॥ और सर्व इन्द्रि-योंको प्रेरणा करनेवाले हैं॥ आकाश वायु अग्नि जल और पृथिवी सर्व विश्वोंको धारण करनेवाले हैं॥ नारा-यण स्वरूप करके ब्रह्माजी होकर जगत्को उत्पन्न करतेहैं और नारायणरूप करके रुद्र बनकर जगत्को हनन करते-हैं॥ और नारायणरूप इंद्र देवताोंके राजा बनकर दैत्योंको वज्र हातमें लेकर मारतेहैं और स्वर्गका राज करतेहैं॥

और नारायण प्रजापतिरूप होकर प्रजाका पालन करते-हैं। नारायणही द्वादश आदित्य होकर जगतमें प्रकाश करतेहैं ॥ नारायणही रुद्ररूप धारण कर दुष्टोंको रुलाते हैं॥ और नारायणही वसुरूप होकर पृथिवीको जलके ऊपर होनेते हिलने नहीं देतेहैं ॥ और नारायणही वेदरूप होकर ज्ञान प्रकट करतेहैं॥ और नारायणही गायत्रीरूप हैं जिसका ऋषिलोग जप करके ब्रह्मलोकको प्राप्त होतेहैं ॥ और नारायणही देवतोंको उत्पन्न करतेहैं ॥ और नारायणही सर्वसंसारमें प्रवृत्त होरहे हैं ॥ और नारायणही मूसल-धार वर्षा करके महाप्रलय करडारते हैं ॥ यह ऋग्वेदका कथन है॥ इति ॥ १ ॥

मूलम्।

नारायणोऽहं सर्वमिदं सर्वव्यापकं सर्वगतम् ॥
नारायणो निराकारो निरंजनो गुणातीतः ॥
नारायणं सच्चिदानन्दस्वरूपमानन्दमयं सर्वथा ॥
नारायणनाम हन्ति पापं दुष्टचित्तं शुद्धं ( करोति ) ॥
नारायणात्प्रतिष्ठते जगत्पाल्यते ॥
नारायणो जगत्कर्त्ता भर्त्ता जगद्धर्त्ता ॥
नारायण आकाशवत्सर्वगतः परिपूर्णः ॥
नारायणः सर्वः स्वयंज्योतिरन्तरात्मा प्रकाशते ॥
इति।

# अथ कठोपनिषद्वल्ली ॥ २ ॥



( मंत्रः ) सर्वे वेदा यत्पदमामनन्ति तपाꣳसि सर्वाणि च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदꣳ सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥ १५ ॥ २ ॥

अर्थ–वेदोंमें कहीं साक्षात् और कहीं परम्परासे एक ब्रह्मकाही प्रतिपादन है और ब्रह्मचर्य्यादि आश्रमोंमें वेदका पढना तप करना और योगाभ्यासादि नियमोंको विद्वान् लोग ब्रह्मज्ञान होनेके लियेही सेवन करते हैं इस ब्रह्मका ओ३म् यह निजनाम है, ईश्वर आदि नाम राजादिकके भी हुवा करते हैं ओ३म्पद अन्य किसीका नहीं होताहै । और यह पद ब्राह्मणशरीर संन्यासीको फलदायक है ॥ अन्य वर्णको फलदायक नहीं है, इस नामसे शब्द अर्थ और ज्ञानका परस्पर मेल करके योगियोंको नित्य उपासना करनी चाहिये अर्थात् ओ३म् यह जो शब्द है इसका वाच्यार्थमें लय और ओ३म् शब्द ओ३म् अर्थ इन दोनोंका ओ३म् इत्याकारक ज्ञानमें लय होनेसे ठीक संयम होताहै और इसी प्रकारके ध्यानसे आत्मज्ञान होताहै ॥ १५ ॥ २ ॥

मू०–एतदेवाक्षरं ब्रह्म एतदेवाक्षरं परम् ॥ एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥ ३ ॥ एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ॥ एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥ ४ ॥

अर्थ–ओ३म् यह शब्दरूप अक्षर ओ३म् यह वाच्य अर्थ तथा ओ३म् यह ज्ञान यहां तीनों शब्द अर्थ और ज्ञानके

साथ एकही रूप ओ३म् लगा है इसलिये ओ३म् यह शब्द और ज्ञान स्वरूप यह केवल संन्यासीके वास्ते है और गृहस्थाश्रमके वास्ते नहीं है॥ तथा गीतामें भी भगवान् कृष्णने कहा है ॥ १६ । ३ । १७ । ४ ॥

"ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥ यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥८॥५॥

अर्थ-( ओं ) इस एकाक्षर महामन्त्रको उच्चारण करता-हुआ अंत समय जो देहको त्याग करताहै वह योगी परम-गति मोक्षसुखको प्राप्त होताहै ॥ ८ ॥ ५ ॥

जो मन चंचल रहता हो तो एकान्तवास करके कुछ कालतक दीर्घ प्रणवका उच्चारण करना चाहिये अभ्यासके अनुभवसे यथार्थ होवेहै यही बात उपनिषद् तथा अग्निपुराणमें भी कही है-

( मू० ) ॐविश्वानि देव सवितर्दुरितानि परासुव यद्भद्रन्तन्न आसुव॥यजु०अध्याय॥३०॥मं०॥३॥६॥

अर्थ-हे सच्चिदानन्दस्वरूप हे परमकरुणानिधे हे अनंत-विद्यासम्पन्न हे विज्ञानविद्याप्रद ( देव ) हे सूर्यादिज्योति-प्रकाशक हे सर्वानन्दप्रद ( सवितः ) हे सकलजगदुत्पादक ( नः ) हमारे ( विश्वानि ) सकल ( दुरितानि ) कहिये हमारे जो दुःख हैं उनको और हमारे सब दुष्टगुणोंको आप कृपा करके ( परासुव ) कहिये दूर कर दीजिये ( यद्भद्रं ) कहिये जो सब दुःखोंसे रहित कल्याण है उसको हमारे लिये सर्वदा प्राप्त कीजिये ॥ ३ ॥ ६ ॥

तथा मुण्डकोपनिषद् ॥ ३ ॥

( मं० ) न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवै-स्तपसा कर्मणा वा ॥ ज्ञानप्रसादेन विशुद्धसत्त्वस्त-तस्तु तं पश्यते निष्कलं ध्यायमानः ॥ ७ ॥

अर्थ-यह परमेश्वर ( चक्षुषा न ) कहिये आंखसे देखनेमें नहीं आते हैं ( न अपि वाचा ) कहिये न वाणीकरके कथन होसकता है ( नान्यैः देवैः ) कहिये विषयोंका ज्ञान करा-नेवाले अन्य इन्द्रियोंसे और ( न तपसा ) कहिये ब्रह्मच-र्यादि आश्रमोंमें होनेवाले नियम वा व्रतोंके सेवनसे ( वा ) अथवा ( न कर्मणा ) कहिये वेद और धर्मशास्त्र सम्बन्धी कर्मोंके सेवनमात्रसे भी ( गृह्यते ) कहिये नेत्र आदि साध-नोंसे विषयादिकके तुल्य वह प्राप्त नहीं होसकता है किन्तु जब मनुष्य इन्द्रियोंको वशमें करैहै तप और वेदोक्त वा धर्मशास्त्रमें कहे कर्म्मोंका सेवन करताहै उससे अंतःकरण शुद्ध होताहै और ( ज्ञानप्रसादेन ) कहिये रागद्वेषादिक दोषरूप मलोंसे रहित निर्म्मल अन्तःकरणवाला होताहै उसके पीछे ( निष्कलं ) कहिये निराव्यासका ( ध्यायमानः ) कहिये ध्यान करता हुआ ( तम् ) कहिये उस परमात्माको ( पश्यते ) कहिये जान लेताहै, आशय यह है, जबतक अपनी इन्द्रियां वशमें न करली हों रागद्वेषादि पञ्चक्लेश न छूटे होवें मन रोककर उसमें योग न किया हो तबतक ईश्व-रप्राप्ति नहीं होसक्ती है जब मन निष्कलंक कियाजावै तबही ईश्वरप्राप्ति होवैगी ॥ ७ ॥

तथा ऋग्वेद कथन करताहै-

श्रुतिः-मनस्तदग्रे समवर्तताधिमनसो रेतः ॥ प्रथ-मं यदासीत ॥ ८ ॥

अर्थ-सृष्टिके पूर्व परमात्माके मनमें सृष्टिरचनात्मक काम संकल्प भया पूर्वसृष्टिके जीव अपने अपने पापपुण्योंके सहित मायावेष्टित परमेश्वरमें लीन हैं उन्होंके भोगार्थ जिसके जैसे पूर्वकर्म थे उसीके अनुसार विचार करके उन्हीं उन्हीं योनिमें प्राप्त करते भये ॥ ९६ ॥ ८ ॥

( मू० ) एकः नारायणो देवो जगतो नेकरूपं चराचरम् ॥

नारायण एक है और माया करके जगत्में अनेक रूप धारण करेहै ॥

( श्रुतिः ) एकः सुवर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे ॥ ९२ ॥ ९ ॥

अर्थ-एक परमात्मा समस्तविश्वमें प्रविष्ट है जैसे पक्षी आकाशमें संचरण करतेहैं तैसे आप संसारसमुद्रमें अंतःकरणरूप आकाशमें प्राणरूपसे संचरण करतेहैं ॥ ९२ ॥ ९ ॥

तथा यजुर्वेद कथन करताहै-

श्रुतिः-आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ॥ संक्रन्दनोऽनिमिष एक वीरः शत ँ सेना अजयत् साकमिन्द्रः ॥ ६ ॥ १० ॥

अर्थ-स्थूल संसाररूपसे व्यक्त है अथवा योगियोंको दीखतेहैं याते व्यक्तरूप नाम है ॥ हजारों शूरवीरोंको जीतते हैं याते सहस्राजित् नाम है सर्व ब्रह्माण्डोंके जीतनेवाले हैं याते अनन्तजित् नाम श्रुति कहतीहै वाराह कूर्म वामन नृसिंह कृष्ण बलदेव निष्कलंक परशुराम मत्स्य रामचन्द्र ॥

इन अवतारोंको लेकर देवताओंके अंश मनुष्यादिकोंके संग आपने असुरोंकी असंख्य सेना जीतीहैं ॥ ६ ॥ १० ॥

तथा श्वेताश्वतरोपनिषद् अध्याय २

( मं० ) यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश ॥ यऽओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥ ११ ॥

अर्थ-जिसकी सत्तासे अग्नि तथा जल अपने कार्य सम्पादन करतेहैं जिसकी सामर्थ्यसे यह महान् संसारचक्र निराधार ठहरा है अथवा यूं कहो अपने ठीक समयमें घूमताहै जिसकी महिमासे हमको औषधियां अन्नादि प्राप्त होतेहैं जिसकी सहायतासे वृक्षादि अपने समयपर फल उगातेहैं ऐसे महान् परम ऐश्वर्य्ययुक्त परमेश्वरको वारंवार नमस्कार है ॥ ११ ॥

तत्त्वदर्शी पुरुष ईश्वरको जान सक्ताहै तहां भगवद्गीता कथन करेहै-

( मू० ) तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥ कर्मिभ्यश्चाऽधिको योगी तस्माद्योगी भवार्जुन ॥ १२ ॥

अर्थ-हे अर्जुन तपस्वियोंसे भी बड़ा योगी है और ज्ञानियोंसे भी बड़ा योगी माना गयाहै और कर्मिष्ठोंसे भी योगी उत्तम कहागया है इसलिये हे अर्जुन तुम भी योगी बनो योगकी प्राप्तिके लिये प्राचीन महर्षियोंने बड़े यत्न कियेहैं इसी योगके पानेसे कपिलदेव जड़भरत याज्ञवल्क्यादि मुनीश्वर सृष्टिमें अतिप्रसिद्ध हुएहैं जिनके यश फैलरहेहैं ॥ १२ ॥

(श्रुतिः) य एतद्विदुरमृतास्ते भवंत्यऽथेतरे दुःख-
मेवापियंति ॥ १३ ॥

अर्थ-मैं अद्वितीयब्रह्मरूप हूं या प्रकार जो अधिकारी पुरुष आत्माको जानेहैं ॥ ते अधिकारीपुरुष ही मोक्षरूप अमृतभावको प्राप्त होवेहैं और जो विषयलंपट आत्माको न जानें सो दुःखको प्राप्त होवेहैं ॥ और जन्ममरणसे छूटें नहीं ॥ १३ ॥

तथा श्रीमद्भागवत चतुर्थस्कन्ध अध्याय ॥ २० ॥

(मू०) श्रीभगवानुवाच ॥ एकः शुद्धः स्वयंज्यो-
तिर्निर्गुणोऽसौ गुणाश्रयः ॥ सर्वगोऽनावृतः साक्षी
निरात्मात्मात्मनः परः ॥ ७ ॥ १४ ॥ ० ॥

अर्थ-राजा पृथुके अर्थ ऋषियोंके प्रति भगवान् कहतेभये, वह मैं एक हूँ और शुद्ध हूँ, मायाते परे हूँ, सर्व दुःखोंसे रहित हूँ और (स्वयंज्योति) कहिये जिस ज्योतिका अभाव कदापि नहीं होवेहै, रातदिन एकरस रहेहै ऐसा मैं जागृत ज्योति हूँ और सत्वगुण रजोगुण तमोगुण तीनों गुणसे रहित हूँ, जगत्के व्यवहारके अर्थ सगुण अवतार लेकर भक्तोंकी रक्षाके निमित्त और अधर्मियोंको मारकर पृथिवीका भार उतारनेके अर्थ युगयुगमें अवतार लेताहूं ॥ और सर्व इन्द्रियोंका प्रेरक हूँ और सर्व इन्द्रियोंते अगोचर हूँ और सर्वप्राणी मेरी सत्तासे चेष्टा करतेहैं ॥ और मैं सर्वका साक्षी हूँ, मनसे परे हूँ, मैं मनका प्रेरक हूँ, मैं किसीके आश्रय नहीं हूं, मैं निरात्मा निराकार अनात्मासे परे अखंड आत्मा हूं, सबसे परे हूँ ॥ हे मुनीश्वरो ! ऐसे सूक्ष्म आ-

त्माके जाननेवालेका जन्म नहीं होताहै और जो आत्माको यथार्थ न जाने सो पुरुष वारंवार जन्म लेकर दुःख पावेगा ॥ ७ ॥ १४ ॥

तथा यह वार्ता यजुर्वेदकी बृहदारण्यकोपनिषत्में भी कथन करी है ॥

मं०–न तस्य प्राणा उत्क्रामंति ।

अर्थ–तिस ज्ञानीपुरुषके मरणकालमें शरीरसे बाहिर प्राणोंका गमन नहीं होवेहै किंतु तहां ही तिनका विलय होवेहै ॥

तथा मुंडकोपनिषत्में भी कहा है–

मं०–गताः कलाः पंचदशप्रतिष्ठा देवाश्च सर्वे तिदेवतासु ॥ कर्माणि विज्ञानमयश्चिदात्मा परेऽव्यये सर्व एकीभवंति ॥ १५ ॥

अर्थ–जिस कालमें ज्ञानीपुरुषका शरीरपात होवे है ॥ तो तिसकी प्राणादिक पंचदश कला होवेहैं सो प्रतिष्ठा कहिये जिसकालमें स्वस्वकारण विषे लीन होजावेहैं और चक्षुआदिक गोलकों विषे स्थित जो देवता अर्थात् इन्द्रिय होवेहैं सो भी स्वस्वअधिष्ठानभूत सूर्य्यादिक देवतोंविषे एकीभावको प्राप्त होयजावेहैं तिसका जीवात्मा और शुभाशुभ कर्म निर्विकार जो परब्रह्म है तिसके साथ एकीभाव होवेहै ॥ १५ ॥

परंतु जब सर्ववासना निवृत्त होवैहै और रातदिन आत्माका अभ्यास होवेहै और सबसे उपराम होवेहै ॥ यह वार्ता योगवासिष्ठके उपशमप्रकरणमें भी कथन करीहै–

मू०—वसतूत्तमभोगाढ्ये स्वगृहे वा जनाकुले ॥ सर्वभोगोज्झिता भोगे सुमहत्यथवा वने ॥ नासौ कलंकमाप्नोति हेम पंकगतं यथा ॥ १६ ॥

अर्थ—हे रामचन्द्र ! जिस पुरुषको आत्मस्वरूपका दृढ बोध भयाहै और चित्तमें भोगोंकी आसक्ति नहीं है सो पुरुष चाहे नानाप्रकारके स्त्रीआदिक उत्तम भोगों करके संयुक्त और नानाप्रकारके बंधु मित्र दास दासी आदिक जनों करके सर्वतरफसे व्याप्त भये अपने गृहविषे निवास करो अथवा सर्वभोगोंसे रहित जो महागह्वर वन है तिसमें जाकरके निवास करो परंतु सो तत्त्वदर्शी पुरुष तिन दोनों करके लिपायमान नहीं होवेहै जैसे कीचमें पड़ाहुआ सुवर्ण कलंकको प्राप्त नहीं होवेहै ॥ १६ ॥

तथा श्रुति कथन करतीहै—

( श्रुतिः ) वेदांतविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥ ते ब्रह्मलोकेषु परांतकाले परामृतात्परिमुच्यंति सर्वे ॥ १७ ॥

अर्थ—वेदांतके श्रवणजन्यज्ञानकरके भलीप्रकार निश्चय किया है अद्वितीय ब्रह्मरूप जिन्होंने तथा श्रुतिस्मृतिविहित सर्वकर्मोंको त्यागपूर्वक ज्ञानाभ्यासरूप योगते शुद्ध हुआ है अंतःकरण जिन्होंका ऐसे संन्यासी किसी प्रतिबंधके वशतें यहां ब्रह्म साक्षात्कारके नहीं उत्पन्नहुए भी तिन श्रवणादिकोंके प्रभावतें ब्रह्मलोक विषे जायके तहां निर्गुण ब्रह्मको साक्षात्कार करेहैं और ता ब्रह्मलोकके अधिपति हिरण्यगर्भके अंतकालविषे ते संन्यासी तहां उत्पन्न होय ब्रह्मज्ञान साक्षात्कारते विदेह कैवल्यरूप मोक्षको प्राप्त होवेहैं ॥१

(श्लो०) वनेपि दोषाः प्रभवन्ति रागिणां गृहेपि पञ्चेन्द्रियनिग्रहस्तपः ॥ अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम् ॥ १८ ॥

अर्थ-रागी जिनके मनसे संसारकी विषयवासना निवृत्त नहीं हुईहै तो उन मनुष्योंके गृहस्थाश्रम छोड़नेपर भी दोष उत्पन्न होजातेहैं परन्तु जो सत्कर्मोंमें प्रवृत्त रहतेहैं जिन्होंने इन्द्रियोंको अपने वश करलियाहै ॥ जिनके रागद्वेष दूर होगये हैं ऐसे उत्तम मनुष्योंके लिये गृहस्थाश्रम भी तपोवनतुल्य है ॥ १८ ॥

परम संतजनोंकी संगत होवेहै और संसारसे वैराग्य होवे और दयावान् होवे और तितिक्षु होवे और सन्मार्गमें तत्पर रहे और किसीका द्रोही नहीं होवेहै ऐसे लक्षणवालेको ज्ञान होताहै कहने सुननेमें ज्ञान नहीं होताहै ओं शान्तिः शान्तिः शान्तिः ॥

ॐ शं नो मित्रः शं वरुणः शन्नो भवत्वर्यमा शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥ ॐ शान्तिः ३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्री १०८ श्रीधरानन्दतीर्थस्वामिपूज्यपादशिष्यश्रीस्वामिविश्वेश्वरानन्दतीर्थोत्तरखंडे विरचिते प्राकृतोपनिषन्नारायणोपनिषदोः प्रथमोऽध्यायः ॥ १ ॥

इति ऋग्वेदः ॥ १ ॥

ॐ

# अथ यजुर्वेदः ।

ॐ अनंताय नमः ॥ भुवः स्वाहा यजुर्वेदं प्रीणाति २

अर्थ-अनंतशब्दसे भुवः महाव्याहृति प्रकट हुई और भुवः शब्दसे यजुर्वेद प्रकट हुआ ॥

अथ नित्यो नारायणः ॥ ब्रह्मा नारायणः ॥
शिवश्च नारायणः ॥ शुक्रश्च नारायणः ॥
कालश्च नारायणः ॥ दिशश्च नारायणः ॥
विदिशश्च नारायणः ॥ ऊर्द्ध्वं च नारायणः ॥
अधश्च नारायणः ॥ अन्तर्बहिश्च नारायणः ॥
नारायण एवेदं सर्वं यद्भूतं यच्च भाव्यम् ॥
निष्कलङ्को निरञ्जनो ॥ निर्विकल्पो निराख्यातः ॥
शुद्धो देव एको नारायणो न द्वितीयोस्ति कश्चित् ॥ १ ॥
य एवं वेद स विष्णोरेव भवति स विष्णोरेव भवति ॥
एतद्यजुर्वेदशिरोऽधीते ॥ २ ॥

अर्थ- यह जो नारायण शब्द है सो नित्य है जिसका नाश कभी नहीं होवेहै सदा अजर अमर है ॥ और नारायणही ब्रह्मारूप होकरके जगतको रचतेहैं और नारायणही शिवरूप होकरके जीवोंके हृदय कमलमें बैठकर इन्द्रियोंकी चेष्टा करातेहैं ॥ और सर्वव्यापक हैं और अविनाशी पुरुष हैं सदा एकरस रहतेहैं ॥ और नारायणही शुक्ररूप करके

दैत्योंके गुरु बनकर उपदेश करतेहैं ॥ और शुक्र सुकर्मरूप होकर जगत्में सुकर्म करात हैं ॥ और नारायणही काल-रूप होकर जगत्का नाश करडारतेहैं ॥ और चारों दिशोंमें नारायणही व्याप रहे हैं ॥ तहां श्रुति–ब्रह्म पश्चिमतो ब्रह्म दक्षिणतश्चोत्तरेण अधश्च ऊर्द्ध्वश्च ॥

अर्थ–ब्रह्म पश्चिमदिशामें भी पूर्ण है ब्रह्म दक्षिणदिशामें भी पूर्ण होरहाहै ॥ चारों दिशाओंमें ब्रह्म पूर्ण है और पातालमें भी ब्रह्मही है और आकाशमें भी ब्रह्मही है ॥ ब्रह्म विना कोई वस्तु नहीं है ॥ अन्तर बाहिर सर्वत्र नारा-यण व्यापक हैं ॥ और जो वेद हैं सो नारायणके श्वास हैं मुनिलोगोंने अर्थ निकालकरके जगत्में ज्ञान उपदेश करके मनुष्योंको भवसागरते पार कियाहै ॥ ( निष्कलंकः ) सर्व क्लेशोंसे रहित है और कोई आवरण नहीं है और संकल्प-विकल्पोंसे रहित है और नारायण चक्षुद्वारा नहीं देख पड़ते-हैं ( निराख्यातः ) इन्द्रिय गोचर नहीं होते किन्तु ज्ञान-नेत्रों द्वारा नारायण जाने जातेहैं अज्ञानीपुरुषोंको बड़े दूर हैं और ज्ञानी संतमहात्माओंको अनुकूल भासतेहैं दूर नहीं हैं ॥ और नारायण सदैव शुद्ध रहतेहैं अशुद्ध कदापि नहीं हैं ॥ जैसे सुवर्ण कीचमें डार देनेपर भी ज्यों-का त्यों बना रहताहै सो वर्णका अभाव नहीं होताहै तैसे नारायण उच्च नीच योनियोंमें एकप्रकार रहतेहैं ॥ और नारायण एक हैं द्वितीय नहीं हैं अपनी माया करके बहुत दीख पड़तेहैं वास्तवमें नारायण सबसे पृथक् रहतेहैं सर्व विष्णुरूप हैं सर्व नारायणस्वरूप हैं नारायणसे कोई वस्तु भिन्न नहीं है ॥ २ ॥ १ ॥

तथा श्रुति कथन करतीहै॥

(श्रुतिः) आदित्ये पुरुषः सोऽसावहं ॐ खं ब्रह्म इति श्रुतेर्वाक्याभ्यां प्रसिद्धं ब्रह्मेत्युच्यते॥ २॥

अर्थ-इसी वास्ते ब्रह्मशब्द सर्वत्र व्यापक है और ज्ञानमय चैतन्य कहाताहै "अहं ब्रह्मास्मि" मैं ब्रह्म हूं "एतद्ब्रह्म" यह दृश्यमान सब ब्रह्म है ॐकाररूप सत्यस्वरूप सो यह पुरुष परमात्मा आदित्यरूप एकही विद्यमान है बुद्धिमें स्थित है सत्यमें शयन करनेवाला आदित्यरूप सो परमात्मा मैं हूं॥ ॐ खं ब्रह्म। ॐकाररूप सत्यरूप आकाशके समान ब्रह्म है यह श्रुति कथन करतीहै॥ २॥

(श्रुतिः) उदरं ब्रह्मेति साकाराख्यमुपागभ्यते हृदये ब्रह्मेत्यारोप्य ब्रह्म अयमेव इति श्रुतेः॥ ३॥

अर्थ-पेटमें ब्रह्म है अब ये साकार उपासनाके अवलम्बसे कथन करतेहैं कि 'हृदये ब्रह्मेति आरोप्य ब्रह्म अयमेव' इति श्रुतिः। हृदयमें ब्रह्मका आरोप करके यही ब्रह्म है यह श्रुति कहतीहै अत एव ब्रह्म निष्केवल है, शून्यसे भी शून्य, सूक्ष्मसे भी सूक्ष्म है, व्यापकसे भी व्यापक है, प्रकाशसे भी प्रकाश और ज्ञानसे भी ज्ञान, नित्यसे भी नित्य, ध्येयसे भी ध्येय है ईश्वरसे भी ईश्वर तत्त्वोंका भी तत्त्व, स्थूलसे भी स्थूल है और आनन्दसे भी आनन्द है सुखसे भी अधिक सुख, चैतन्यसे भी अधिक चैतन्य है, रूपसे भी अधिक रूप और ज्योतियोंका ज्योति है, इसमें प्रमाण "ज्योतिषामपि तज्ज्योतिः तमसः परमुच्यते" इति। ज्योतियोंका ज्योति और अन्धकारसे परे है, इस स्मृतिके और उपरोक्त वाक्योंके प्रमाणसे ब्रह्म अनिर्वचनीय अर्थात् मन वाणीका अविषय है॥ ३॥

तथा भगवद्गीता प्रमाण है-

ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठति ॥
भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया ॥ ६१ ॥

अध्याय ॥ १८ ॥ ४ ॥

अर्थ-हे अर्जुन ! ईश्वर सकल प्राणियोंके हृदयमें रहैहै और यह सकल प्राणियोंको कालचक्रपर चढाकर अपनी मायाशक्तिसे अज्ञानमें फिरावैहै ॥ ६१ ॥ ४ ॥

( श्लो० ) पूरिताशेषदिक्कुंजमनन्ताकाशनिर्भरम् ॥
एकं वस्तु जगत्सर्वं चिन्मात्रं वारिवाम्बुधिः ॥ ५ ॥

अर्थ-समस्त दिशा और कुंजोंको व्याप्त करनेवाले अनन्त तथा आकाशकी समान सर्वत्र विद्यमान है केवल एक चैतन्य स्वरूपही यह सब जगत् है जैसे समुद्र केवल जलस्वरूपही होताहै ॥ ५ ॥

जैसे समुद्र जलसे भिन्न नहीं है तैसे जगत् ब्रह्मसे भिन्न नहीं है परंतु आत्मा और महावाक्योंके अर्थोंका विवरण करतेहैं कि समस्त विषयोंकी वासनासे रहित केवल निर्विशेष ब्रह्म चिन्तनमें स्थित पुरुष परमहंसपदको प्राप्त होताहै ॥

आदौ ऋग्वेदस्य प्रज्ञानमानन्दं ब्रह्म अहं ब्रह्मास्मीति यजुर्वेदस्य तत्त्वमसीति सामवेदस्य अयमात्मा ब्रह्मेति अथर्ववेदस्य अहंब्रह्मास्मीति यत्परं ब्रह्मेत्यादिमहावाक्यैर्ब्रह्मविचारः ॥ ६ ॥

अर्थ-जिसमें पहिले ऋग्वेदका महावाक्य प्रज्ञानमानन्दं ब्रह्म है और अहं ब्रह्मास्मि ये यजुर्वेदका महावाक्य है और तत्त्वमसि सामवेदका और अयमात्मा ब्रह्म यह अथर्ववेदका है अहं ब्रह्मास्मि और यत्परं ब्रह्म इत्यादि महावाक्यों करके ब्रह्मका विचार कर्तव्य है ॥ ६ ॥

उनमेंसे पहिले ऋग्वेदके ब्रह्म और प्रज्ञान शब्दका व्याख्यान करतेहैं कि 'एकमेवाद्वितीयं ब्रह्म' ब्रह्म एक और अद्वितीय है ये सिद्धान्त है प्रज्ञान नाम स्वतः चेतनाका है उसके विशेष यद्यपि अनेक हैं तथापि उनमें यथामति व्याख्यान करताहूँ अतिशयकरके उत्कृष्ट जो ज्ञान है उसका नाम प्रज्ञान है अर्थात् उपाधि रहित स्वयं चेतन भूत भविष्यत् वर्तमान कालत्रयशून्य जाग्रत् स्वप्न सुषुप्ति ये तीनों अवस्थाओंसे रहित है विशेषकरके मुक्तस्वरूप स्वतंत्र जो प्रज्ञान है उसीका नाम प्रज्ञान है ॥ जिस ज्ञानसे माया चैतन्य है और जिस ज्ञानसे चौबिस तत्त्व चैतन्य हैं और जिसकी न्याई जैसे सूर्यसे चक्षु चैतन्य है और अग्निसे पात्र चुम्बकसे लोहा सूत्रधारसे चित्र और जैसे काष्ठसे अग्नि पुरुषसे छाया वायुसे धूल और धनुर्धारीसे बाण और जैसे वृक्षसे छाया चैतन्य है ॥ इसी प्रकारसे परा पश्यन्ती मध्यमा वैखरी स्वरूपसे चैतन्यही समस्त जगत् प्रपञ्चरूपसे उत्पन्न होताहै ज्ञानशक्ति और इच्छाशक्ति क्रियाशक्ति स्वरूपसे चैतन्य जगत्के आकारको धारण करताहै ॥ इसी लिये 'वासुदेवः परब्रह्म' वासुदेव परब्रह्म है यह श्रुति भागवतकी आज्ञा है जिसमें प्राणी निवास करेहैं उसका नाम वायु है और जो प्रकाशमान हो उसका नाम देव है अर्थात् जो प्राणियोंका निवासस्थान हो और प्रकाशमान हो उसका

नाम वासुदेव है प्रज्ञा शब्दसे भी प्राणियोंका निवास माना है अतएव प्रज्ञाको वासुदेव कहतेहैं ॥ वाणी हस्त पाद गुदा लिङ्ग नामक ये पञ्च कर्मेन्द्रिय मन बुद्धि चित्त अहंकार इन चारोंके समुदायरूप अन्तःकरणका प्रेरक है निर्गतान्तःकरण अर्थात् विषयके साथ संबंध रखनेमें समर्थ अन्तःकरण संयुक्त कर्णद्वारा शब्दका ग्रहण करताहै निर्गत अन्तःकरण संयुक्त चक्षुरूपको ग्रहण करतेहै और नासिकासे गन्ध जिह्वासे रसको चर्म्मसे स्पर्शका ग्रहण करताहै ॥

अत एव श्रोत्र त्वचा घ्राण चक्षु जिह्वा इन पञ्च ज्ञानेन्द्रियोंके प्रेरणा करनेवाले और वाक् हस्त पाद गुदा लिङ्ग इन पांच कर्मेन्द्रियोंके प्रेरक औ मन बुद्धि चित्त अहंकार इन चारोंके समुदायरूप अन्तःकरणके प्रेरक प्राण अपान व्यान उदान समान पांच यह हैं ॥ ५ ॥ और नाग कूर्म कृकल देवदत्त धनंजय यह पांच ॥ ५ ॥ इन दोनों भेदविशिष्ट सर्वके प्रेरक वायु हैं ॥ पूर्वोक्त समस्त प्रपञ्चकी उत्पत्ति और प्रलयका कर्ता जगतको साक्षिरूपसे देखनेवाला प्रज्ञान नामक ब्रह्म है ॥

सोई विद्यारण्य स्वामीने भी पञ्चदशीमें कहाहै ॥

( मू० ) येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च॥
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥७॥

अर्थ–जिस करके देखताहै सुनताहै सूंघताहै और ग्रहण करताहै स्वादिष्ठ और अस्वादिष्ठ जानताहै उसको प्रज्ञान शब्दवाच्य कहतेहैं ॥ ७ ॥

( मू० ) तस्मात् प्राज्ञानशब्देन ब्रह्मविशेषणं सर्वेश्वरः कथ्यते ॥

अर्थ-इसीकारण प्रज्ञानशब्दवाच्य ब्रह्मविशेष जगन्नियन्ता सर्वेश्वर कहाताहै ॥

तथा पञ्चदशी-

( मू० ) चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ॥
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्ममय्यपि ॥ ८ ॥

अर्थ-ब्रह्मा इन्द्र देव आदिमें और मनुष्य अश्व गौ आदिमें जगत्के उत्पत्ति प्रलयका कारण एक चैतन्य ब्रह्म है अतएव प्रज्ञान ब्रह्म मेरेमें भी है क्योंकि प्रज्ञानके अतिरिक्त कोई प्राणी पदार्थ अवशिष्ट नहीं है ॥ ८ ॥

( मू० ) तत्सूत्रधार ईश्वरः मायाऽविद्या नटी नृत्यङ्कारयति नट इव इति ऋग्वेदे प्रज्ञानशब्दार्थनिर्णयः प्रथमः सिद्धान्तः ॥ १ ॥ ९ ॥

अर्थ-वह सूत्रधाररूपी ईश्वर माया और अविद्यारूपी नटीको नटकी नाईं नचाताहै यह ऋग्वेदमें प्रज्ञान शब्दके निर्णयका प्रथम सिद्धान्त है ॥

ताहां ( श्रुतिः ) आनन्दं ब्रह्मेति व्यजानात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्ति अभिसंविशन्तीति श्रुतेः ॥ १० ॥

अर्थ-आनन्दको ब्रह्म जानो आनन्दहीसे पृथिवी जल तज वायु आकाश उत्पन्न होतेहैं और आनन्दसे जीतेहैं आनन्दमेंही लय होतेहैं और प्रवेश करतेहैं यह श्रुतिप्रमाण है ॥ १० ॥

(मू०)स्वस्वरूपमुपाधिरहितमानन्दङ्करोतियदानन्दं भवति तदाहमित्यात्मानन्दं भवति तथा अखण्डानन्दं निजबोधानन्दं कैवल्यानन्दं सहजानन्दमच्युतानन्दं रामानन्दं वीर्यानन्दं सुखानन्दमनन्तानंदं व्यापकानन्दं श्र्यानन्दं प्रकाशानन्दं भवति ॥११॥

अर्थ–उपाधिरहित अपने स्वरूपको आनन्दित करताहै जब आनन्द होताहै तब अहं इस आत्माके आनन्दको अनुभव करताहै और अखंडानंद निज बोधानन्द कैवल्यानन्द सहजानन्द अच्युतानंद रामानंद वीर्यानंद सुखानंद अनन्तानंद व्यापकानंद श्र्यानंद प्रकाशानंद प्रभृतिपादोंको धारण करताहै ॥ ११ ॥

( श्रुतिः ) अत एव ब्रह्मानन्देन जगदानन्दो भवति ब्रह्मानन्दं लब्ध्वा ऋतमानन्दो भूत्वेति श्रुतेः समस्तप्रपञ्चातीतानन्दः य आनंदः सत्तामात्रेण समस्तप्रपञ्चमानन्दयति ॥ १२ ॥

अर्थ–इसवास्ते ब्रह्मानंदसे जगतआनंद होताहै जिसमें श्रुति भी प्रमाणहै ब्रह्मानंदको प्राप्त होकर सत्यआनंद होताहै अर्थात् समस्त प्रपञ्च सहित जो आनंदहै सोई आनंद समस्त जगत्प्रपञ्चको आनंदित करताहै ॥ १२ ॥

अत एव अन्नमय प्राणमय मनोमय विज्ञानमय आनन्दमय और इन पञ्चकोशात्मकः जो जीव है सो आनन्दको प्राप्त होता है और सत्‌चित् आनन्दस्वरूप परमात्मा कहा जाताहै ॥ इसी प्रकार परमात्मानन्दकी, सत्तामात्रसे मूलप्रकृति अर्थात माया आनन्दको प्राप्तहोतीहै और उसमायाका कार्य आका-

श्यादि और चौबीसतत्त्व स्त्रीलिङ्ग पुंलिङ्ग रूपसे परस्पर मिलकर अत्यन्त आनन्दको प्राप्त होतेहैं ॥

( मू० ) अत एव वैकुण्ठादि शेषनागपर्यन्तं समस्त-जीवजातिदेवदैत्यसिद्धगंधर्वमुनियक्षतिर्यङ्नागकीट-पतङ्गस्थावरजङ्गमसमस्तशिवशक्त्यात्मको भवतीति सत्यम् ॥ १३ ॥

अर्थ–इसी कारणसे वैकुंठसे आदिलेके शेषनागपर्यंत समस्त जीवजाति देव दैत्य सिद्ध गन्धर्व मुनि यक्ष तिर्यक् नाग कीट पतङ्ग स्थावर जंगम शिव शक्ति स्वरूपहैं यह सत्यहै ॥ १३॥

इसलिये एकाकी पुरुष केवलमें ही रमण करता दूसरेकी इच्छा करताहै और वही आत्मा पति और पत्नी इस द्विविधरूपसे परिणत होताहै ॥

तहांश्रुतिः एकोऽहं बहुस्याम् ॥

मैं एकहूं एकसे अपनी मायासे बहुत होजाताहूं ॥

स्थूल सूक्ष्म कारण अवस्थात्रय चैतन्य कैवल्यमोक्षकी और ब्रह्मकी चतुर्थावस्थामात्र आनंदरूपका अनुभव करतेहैं अत एव आनन्द ब्रह्म है यह सत्य है यह ऋग्वेदमें आनन्द शब्दके व्याख्यानका दूसरा सिद्धांत समाप्त हुआहै ॥

श्लोतिकः यथा न पुत्तिकाशून्यः स्तम्भोऽनुत्कीर्णपुत्तिकः।तथाभावं जगद्ब्रह्म तेनशून्यं न तत्पदम्॥१४॥
सौम्यांभसि यथा वीचिर्न चास्ति न च नास्ति च ॥
ब्रह्मण्येवं तथा विश्वं शून्याशून्यपदं गतम् ॥ १५ ॥

अर्थ–जिस स्तम्भमें पुतली काढीगईहो वास्तवमें वह स्तम्भ पुतलीसे पृथक् नहीं है ऐसेही ब्रह्म और संसारका भाव है क्योंकि ब्रह्मपदसे संसार भिन्न नहीं है ॥ १४ ॥ १५ ॥

( मू० ) अतःपरं ब्रह्मशब्दस्य निर्णयः कथ्यते माया तु शेषनागपर्यंतं समस्तप्रपञ्चान्वयरूपेणावतिष्ठते. किमिवसूत्रेमणिगणा इव यस्माज्जगदोतप्रोतं ततः १६

अर्थ-अब ब्रह्मशब्दके अर्थका विवेचन करतेहैं श्रीस्वामी शङ्करानन्दजीका वाक्य है कि माया तो शेषनागपर्य्यंत समस्त जगत्प्रपञ्चमें मनियोंका समुदाय तद्वत् मायामें जगत पिरोया हुआहै जैसे एकतागेमें मालाके दानाहैं तैसे मायामें जगत् ओतप्रोतहै ॥ १६ ॥

( मू० ) अतः ब्रह्म सम्पूर्णदेशकालवस्तुस्वरूपं समस्तप्रपञ्चगुणदोषरहितं निर्लेपमच्छेद्यमक्लेद्यमभेद्यमदाह्यमशोष्यम् ॥ १७ ॥

अर्थ-अब नारायणके स्वरूपका वर्णन करतेहैं किसमस्त वस्तुओंके संबंधसे तथा कालके संबंधसे और देशके संबंधसे रहितहै और देशकालवस्तुका स्वरूप भूत समस्तजगत प्रपञ्चके गुणदोषोंसे रहितहै और कमल दलकी न्याईं निर्लेप शस्त्रादिकों करके छेदा नहीं जाताहै और जलादिकोंसे भी जला नही है पाषाण काष्ठ दण्डादिकोंसे जो भेदन न होसके अग्निआदिकोंसे दाह न करसके और वायु आदिकोंसे जिसका शोषण न होसके है ॥ १७ ॥

तथा श्रीमद्भगवद्गीतामें कथन है ।

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।

( मू० ) समस्तेषु वस्तुष्वनुस्यूतमेकं समस्तानि-

अर्थ पूर्ववत् समझिये ॥

वस्तूनि यन्नस्पृशंति । वियद्वत्सदा शुद्धमच्छस्वरूपं स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १८ ॥

अर्थ–समस्त वस्तुओंके साथ जिसका संबंध है और कोई वस्तु जिसको लिपायमान नहीं कर सकतीहै आकाशकी न्याईं शुद्ध निर्मल जिसका स्वरूप है और जो नित्य प्राप्तस्वरूप जो आत्मा है सो मैं हूं ॥ १८ ॥

( मू० ) सदसत्संसारस्यासत्यता प्रतिभासमानत्वात् ॥ क इव रज्जुसर्प इव शुक्तौ रजतमिव सरसि फेनमिव ॥ नभोऽभ्रमिव ॥ १९ ॥

अर्थ–असद्रूप संसारकी सत्यता प्रातिभासिक है किसकी तरह जैसे जेवरीमें सर्प सीपमें चांदी समुद्रमें फेन और आकाशमें मेघ प्रातिभासिक हैं तद्वत् ॥ १९ ॥

कूटशब्दसे मिथ्यामायाको जानो आकाशके समान व्याप्त समस्त जगत्प्रपञ्चमें अन्तर्य्यामि स्वरूपसे स्थितहै जिसकी सत्तामें जगत्की सत्यता प्रातिभासिक होरही है॥ यह ऋग्वेदके वाक्यत्रयके पदोंका अर्थ अवलोकन कीजिये और वेदमें उपासनाकांड कर्म्मकांड और ज्ञानकांड हैं यह तीनकांड प्रतीत होतेहैं इतने लिखनेसे परमात्माकी सत्यता सर्वथा प्रसिद्धहै ॥

तथाचश्रुतिः–स एव जीवो विचारप्रसूतिः प्राणेन घोषेण गुहाप्रविष्टो मनोमयं सूक्ष्ममुपैति रूपम् ॥ मात्रास्वरो वर्ण इतिश्रुतिः ॥ २० ॥

अर्थ–वही जीव विचारकी संततिरूपप्राण घोष संज्ञक प्राण करके गुफामें प्रवेशकर मनोमय मनका किया वा मनसे संयुक्त सूक्ष्म अर्थात् लघुरूपको प्राप्त होताहै मात्रा स्वर और वर्ण इस रूपसे ॥२० ॥

( मू० ) ईश्वरस्य प्रथमं प्रथमश्वासनिर्गतः ॐकार इति स एव ओकारादिषोडशस्वराः ककारादिपञ्चविंशतिस्पर्शाः यकारादिदशानुस्वराश्च एवं प्रथमबीजरूपसहिता द्विपञ्चाशद्वर्णात्मिका भवतिवाणी२१

अर्थ–ईश्वरके प्रथम श्वाससे पहिले ॐ कार निकला फिर अकारसे आदिले सोलहस्वर और ककारसे आदिले पचीस स्पर्श यकारसे आदि दश अनुस्वार निकले इसी तरह प्रथम बीज ॐ कार सहित ५२ वर्णात्मकवाणी हुई ॥ २१ ॥

( मू० ) तदनन्तरं छन्दोमयं भवति, ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति चत्वारो वेदा भवन्ति ॥ २२ ॥

अर्थ–पश्चात् वही वाणी छन्दोबद्ध हुई और ऋग्वेद यजुर्वेद सामवेद अथर्ववेद यह चारवेदका एकही मत है ॥२२॥

( श्लो० ) विश्ववीचिविलासोऽयं चित्सुधाब्धेरुदंचति ॥ विलीयते च तत्रैव मध्ये कथमतन्मयम् ॥ २३ ॥ यथा न तोयतो भिन्नाः फेनोर्मिजलबुद्बुदाः । आत्मनो न तथा भिन्नं विश्वमात्मविनिर्गतम् ॥ २४ ॥ आत्मनोऽपि तथा भिन्नमात्मन्येव लयं व्रजेत्॥ मृदि कुम्भो जले वीचिः कनके कटकं यथा ॥ २५ ॥ आत्माज्ञानाज्जगद्भाति ह्यात्मज्ञानान्निवर्त्तते ॥ रज्ज्वज्ञानादहिर्भाति तज्ज्ञानाच्च निवर्तते ॥ २६ ॥

अर्थ-प्रथम तो ब्रह्मरूप अमृतके समुद्रमेंसे संसाररूप लहरोंका विलास उत्पन्न होताहै और पीछेसे उसीमें लय होजाताहै तो फिर मध्यमें यह संसार ब्रह्मरूप क्यों न होवै किंतु सब ब्रह्मरूपहै ॥ २३ ॥ जिसप्रकार कि फेन लहरें और जलके बुद्बुदे जलसे भिन्न नहीं होतेहैं ॥ ऐसे ही आत्मासे उत्पन्नहुआ यह संसार आत्मासे पृथक् नहीं है ॥ ॥ २४ ॥ ब्रह्मउत्पन्न हुआ संसार ब्रह्महीमें इस प्रकार लय होजाताहै जैसे मृत्तिकामें घट जलमें तरंगे और कटकादिक सुवर्णहीमें मिलजातेहैं ॥ २५ ॥ ब्रह्मका ज्ञान न होनेसे यह संसार भासताहै और आत्मज्ञान होजानेसे इस प्रकार निवृत्त होजाताहै जैसे रस्सीका ज्ञान न होनेसे सर्प प्रतीत होताहै और रज्जुका ज्ञान होनेसे भ्रम दूर होताहै ॥ २६ ॥ यहाँ तक ऋग्वेदके ब्रह्मशब्दका निर्णय समाप्तहुआ ॥

अतःपरं यजुर्वेदसम्बन्धिवाक्यनिर्णयः कथ्यते ॥

( श्रुतिः ) अहं ब्रह्मास्मीति ॥

अर्थ-मैं ब्रह्म हूं यह श्रुतिका साधारणतः अभिप्राय है ॥

अथाहंशब्दनिर्णयं वक्ष्यति अहं जगत्कर्ता अहं जगद्धर्ता अहं जगत्साक्षी अहं जगत्प्रेरकः अहं जगद्भोक्तेतिश्रुतिः ॥ २७ ॥

अर्थ-अब अहंशब्दका निर्णय कहतेहैं श्रुतिमुखसे मैं जगत्का करनेवालाहूं और मैंही जगत्को प्रतिपालन करनेवालाहूं और जगत्का साक्षी मैं हूं और जगत्का प्रेरक और भोक्ता मैं हूं ॥ २७ ॥

(श्रुतिः) मय्येव सकलजातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद्ब्रह्मास्म्यहमद्वयम् ॥ इति श्रुतेर्वाक्यं प्रमाणम् ॥ २८ ॥

अर्थ-मेरेमें ही समस्तजगत् प्रपञ्च उत्पन्न हुआहै और मेरेमें स्थितहै और मेरेमें सर्वलयको प्राप्तहोताहै इसलिये अद्वयब्रह्म मैं हूं यह श्रुतिके अनुकूल प्रमाण हुआहै ॥ २८ ॥

तथा योगवासिष्ठे श्रीवशिष्ठ उवाच–

( मू० ) तत्त्वात्मबोधमेवैकः सर्वाशातृणपावकः ॥
प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः॥२९॥

अर्थ-एक परमात्माकासाक्षात्कारही सम्पूर्ण आशारूपी तृणोंकेलिये अग्निकी समान है येही तृष्णाका दाहरूप ज्ञान समाधि कहाताहै एकान्तमें मौन होकर बैठजानेका नाम समाधि नहीं है ॥ २९ ॥

( मू० ) चिदाकारमिदं सर्वं जगदित्येव भावयेत् ॥
यस्तिष्ठत्युपशान्तस्थः स ब्रह्मकवचः सुखी ॥ ३० ॥

अर्थ-जो पुरुष इस जगत्को ब्रह्मरूपही देखताहै और ऐसीही भावनासे शान्तस्वरूप परमेश्वरमें स्थितहै वही ब्रह्मरूप कवचसे भलीप्रकार रक्षित होकर सुखी होताहै ३०

सर्वातीतपदालम्बी पूर्णेन्दुशिशिराशयः ॥ यस्ति-
ष्ठति सदा योगी स एव परमेश्वरः ॥ ३१ ॥

जोयोगी सबसे परे ब्रह्म पदका अवलम्बन करनेवाला और पूर्णचन्द्रमाकी समान शान्तचित्तवाला है वह योगीजन साक्षात् परमेश्वरही है ॥ ३१ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्य्य श्री १०८ श्रीध-
रानन्दतीर्थस्वामिपूज्यपादशिष्यश्रीस्वामिविश्वेश्वरा-
नन्दतीर्थ उत्तरखंडे विरचिते प्राकृतोपनिष-
न्नारायणोपनिषदो द्वितीयोऽध्यायः ॥

इति यजुर्वेद ॥ २ ॥

ॐ

ॐगोविंदाय नमः स्वःस्वाहासामवेदं प्रीणाति॥३॥

अर्थ—गोविंदशब्दसे स्वः और स्वः शब्दसे सामवेद प्रकट भयाहै ॥ ३ ॥

## अथ सामवेदीया नारायणोपनिषत् प्रारंभः ॥

(मू०) ओमित्यग्रे व्याहरेत् नमइति पश्चात् नारायणायेत्युपरिष्टात् ॥ ओमित्येकाक्षरम् नम इति द्वेऽक्षरे ॥ नारायणायेति पंचाक्षराणि ॥ एतद्वै नारायणस्याष्टाक्षरं पदं यो हवै नारायणस्याष्टाक्षरं पदमध्येति ॥ अनपब्रुवः सर्वमायुरेति ॥ विन्दते प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते ॥ ततोऽमृतत्वमश्नुते इति एतत्सामवेदशिरोऽधीते ॥ ३ ॥

अर्थ—अद्वैतते द्वैतभावको प्रपञ्च करके भासताहै ॥ सो निर्गुणब्रह्मको नमस्कार करताहूं ॥ और चौबीसतत्त्वका शरीर बनकर पश्चात् वायुरूप होकर प्रवेश करताहै॥ सो नारायणकी सत्ता करके यह शरीर चेष्टा करता है॥ और ॐकार ब्रह्मसे द्विअक्षरवाला होता भया और नारायण पाँच अक्षरवाला होताभया और नारायणअष्टाक्षरवाला होताभया और नमोनारायणाय और सर्ववस्तुके अनुभव करनेवाले और गुप्त रहनेवाले सर्वइन्द्रियोंका प्रकाश करनेवालेहैं सर्वइन्द्रियोंका पतिहै और सर्वका साक्षी एक होकर सबसे न्यारे रहतेहैं ॥ और सदा अमर

हैं । जन्ममरणसें रहितहैं एक नारायणकरतार । हरि-भक्तनके हेतसें लेत सगुणअवतार ॥ दूर कियो महिभार॥३॥

(श्रुतिः)सूक्ष्मो भूत्वा शरीराराधितिष्ठति सर्वाणि चाङ्गान्यभिमृश्यति तस्मादुच्यते सूक्ष्मः ॥ ४ ॥

अर्थ–सो परमात्मा सूक्ष्म है जैसे जल सूक्ष्म है पृथिवीमें प्रवेश होजाताहै ऐसे सूक्ष्म है अर्थात् ज्योतिस्वरूप है यांते जैसे काष्ठमें अग्नि ऐसे प्राणीमात्रोंके शरीरमें व्याप्तहै किंवा जैसे गृहमें दीपक है तैसे शरीरके प्रकाशक हैं ॥ ४ ॥

( मू० ) अत एव मूलप्रकृतिस्तदात्मा चैतन्याभिमानी भवति अहं ईश्वर इति मन्यते यदा तदाहं शब्दः प्रकृत्यारूढो भवति ॥ ५ ॥

अर्थ–इसीलिये तब मूलप्रकृति ( माया ) आत्मासे चैतन्यका अभिमान कर्ता है मैं ईश्वर हूं ऐसा मानती है तब अहंशब्द प्रकृतिमें आरूढ होताहै अर्थात मायामय जगतमें अहन्ता विराजमान है ॥ ५ ॥

नारायणजो अहंशब्दसे रहित हैं ॥ नारायणका सुख शब्दहै औ असंग शब्द है औ आनन्द शब्दहै और अविनाशी शब्द है ॥

( मू० ) तस्याभिमाने नित्यत्वङ्कथं संभवति अच्युतोहमनन्तोऽहं गोविन्दोहमहं हरिः ॥ आनन्दोहमशेषोहमजोहममृतोऽस्म्यहम्॥ नित्योहं निर्विकारोऽहं निरंजनोहं शब्दप्रमाणम्भवति ॥६॥

अर्थ–मैं अच्युत हूं अनन्त हूं गोविन्द हूं मैं हरि हूं मैं आनन्दहूं मैं अशेष हूं और मैं अज हूं औरमैं अमृत अविनाशी

हूं ॥ और नित्य हूं निर्विकार हूं और निरंजन हूं इत्यादि शब्दों करके जगन्नियंता परमात्माका निरूपण करतेहैं ॥ ६ ॥

( मू० ) यथाग्निरेकोऽनेकोपाध्युष्णत्वं करोति एकश्चन्द्रो ज्योत्स्ना अनेकाः सन्ति मृत्तिकैकैव घटास्त्वनेकाः ॥ ७ ॥ सूर्यएकश्च रश्मयस्तु अनेका अग्निरेक एव स्फुलिंगा अनेकाः समुद्र एकश्च तरंगा बहवो बुद्बुदाश्चानेकाः ॥ ८ ॥

अर्थ-इसप्रकारसे एकही ब्रह्म अनेक मायाके प्रपञ्च और अभिमानको करताहै और जैसे अग्नि एकहै पर अनेक उपाधि उष्णता करताहै और जैसे चन्द्रमा एक है और ज्योत्स्ना ( चांदनी ) अनेक और मृत्तिका एकही हैं परंतु उससे घट अनेक हैं उत्पन्न होते हैं और जैसे सूर्य एकही है रश्मि ( किरणें ) अनेक हैं और अग्नि एक है परंतु स्फुलिंग चिनगारी अनेक और समुद्र एकही है परंतु तरङ्ग और बुदबुदे अनेक उत्पन्न होते हैं ॥ तैसेही ब्रह्म एक है उसमें प्रपञ्च अनेक हैं ॥ ८ ॥

( श्रुतिः ) तत्सृष्ट्वा तदेवानुप्राविशत् सर्वं खल्विदं ब्रह्मइतिश्रुतेश्च ।

अर्थ-( तत्सृष्ट्वा ) कहिये वह परमात्मा जगत्को उत्पन्न करके आपही जगत्में प्रवेश करता हुआ सर्व प्रपञ्च ब्रह्म है ब्रह्मसे भिन्न कोई वस्तु नहीं है यह सकल ब्रह्मही है ॥ ९ ॥

तत्पूर्णतया पृथ्वीपूर्णता भवति तत्पूर्णतयापाम्पूर्णतायाभवतितत्पूर्णतयातेजः पूर्णताभवत्येवमाकाशादिसमस्तप्रपञ्चाधारभूतंबृहत्त्वाद्ब्रह्मेत्युच्यतेसर्वधारोनिराधारइतिश्रुतेः ॥ १० ॥

अर्थ-जिसकी पूर्णतासे आकाश वायु तेज जल पृथ्वी इन पंच तत्त्वोंकी पूर्णता है अर्थात् जिस परमात्माकी शक्तिसे समस्ततत्त्व सत्तावान् प्रतीत होते हैं उसीको स्पष्ट करते हैं कि जिसकी पूर्णतासे पृथ्वी जल और तेजकी पूर्णता अर्थात् व्यापकता है इसप्रकार आकाशादि समस्त प्रपञ्च जगत्का आधारभूतब्रह्म है व्यापक होनेसे ब्रह्मशब्द वाच्य परमेश्वर कहाता है (सर्वाधारो निराधारो) कहीये परमात्मा सर्व जगत्प्रपञ्चका आधार है और निराधार है अर्थात् कमलपत्रके समाननिर्लेप है ॥ १० ॥

( मू० ) अनन्तकोटिब्रह्माण्डप्रकाशकोऽनन्तकोटिब्रह्माण्डप्रेरकोऽनन्तकोटिब्रह्माण्डांतर्वर्ती । स निर्लेपोऽत्यन्तसूक्ष्मतरः इतिश्रुतेः ॥ ११ ॥

अर्थ-अनन्तकोटिब्रह्माण्डका प्रकाशक अनन्तकोटिब्रह्माण्डका प्रेरक असंख्यब्रह्माण्डमें व्याप्त होरहाहै तिसमें श्रुतिभी प्रमाण है यह परमात्माकमलदलकेसमान निर्लेप और अतिसूक्ष्मपदार्थसेभी सूक्ष्म है ॥ ११ ॥

ऊर्ध्वाधस्तिर्यङ्मर्यादारहितं पूर्णं ब्रह्म केवलं मोक्षस्वरूपं समो नागेन समो मशकेन सम एभिस्त्रिभिर्लोकैः इति श्रुतेः ॥ १२ ॥

अर्थ-ब्रह्म ऊपर है वा नीचे है या टेढा है इस मर्यादासे रहित है पूर्णब्रह्म केवलमोक्ष स्वरूप है तिसमें श्रुतिः प्रमाण है (समो नागेन) कहिये परमात्मा हाथी व पर्वतके समान है और (मशक) कहिये मच्छरके समान है और तीनों लोकोंके समान है अर्थात् जगदीश्वर छोटेसे छोटे और बडेसे बडा है अणुसे अणु और बडेसे बडा हैं सबमें बराबर समानरूप है ॥ ०१२ ॥

(श्लो०) जलान्तश्चन्द्रचपलं जीवनं खलु देहिनाम् ॥ तथाविधमिदं ज्ञात्वाशश्वत्कल्याणमाचरेत् ॥ १३ ॥

अर्थ-जलांतकाहिये किसी कम्पित पात्रमें रक्खे हुए जलमें जिसप्रकार चंद्रमाका प्रतिबिम्ब चलायमान भासता है इसी प्रकार इस देहमें स्थित प्राणको अस्थिर जानकर अपने कल्याण चाहनेवाले पुरुषको परोपकारादि हिंसा रहित कर्म्म तथा ईश्वराराधना नित्य करना चाहिये ॥

हे सज्जन मित्रो यह छोटीसी ईश्वर प्रार्थनाकी पुस्तक आप लोगोंके करकमलोंमें अर्पित करताहूं कृपाकरके स्वीकार कीजिये ॥ ऐसा विचारवान् मनुष्य देह बडे भागसे प्राप्त होता है सुखस्थानको यह मनुष्य तन पहुचते हैं ॥१३॥

(श्लो०) विषयलंपटो ज्ञानी न भवति सरागः स्त्रीषुच ॥ कुतो ज्ञानं भवेत् वासना ज्ञाने नास्तिचेत् ॥ १४ ॥ लोभक्रोधी नच ज्ञानेऽधिकारी अदयोऽकोमलचित्तो विषयभ्रांतिसुखो मूर्खो जनश्च दुर्बुद्धिः ॥ १५ ॥

अर्थ-परंतु ज्ञान विना अधिकारी होवै नहीं जो पुरुष विषयोंमें आसक्त है और जिनकी अति आसक्ति स्त्रीमें है उसको ज्ञान होना महा दुर्घट है ॥ और जिसको नानाप्रकारकी वासना लगीहै तिसको कदापि ज्ञान होवै नहीं ॥१४॥ और जो अति लोभी पुरुष हैं तिनको भी ज्ञान नहीं होवै और महा क्रोधी है उसका पुण्यदान तीर्थ व्रत सुकर्म्म नाशहोजाताहै तो ज्ञान कहांसे होवे है और जिसको दया नहीं है और चित्त कठोर हैं उसको ज्ञान कैसे होवे है ॥ केवल विषयोंमें

